# ...कुमारकृता शिवशिवास्तुतिः

नमो नमस्ते गिरिशाय तुभ्यं नमो नमस्ते गिरिकन्यकायै ।
नमो नमस्ते वृषभध्वजाय सिंहध्वजायै च नमो नमस्ते ॥ १॥

नमो नमो भूतिविभूषणाय नमो नमश्चन्दनरूपितायै ।
नमो नमः भालविलोचनाय नमो नमः पद्मविलोचनायै ॥ २॥

त्रिशूलहस्ताय नमो नमस्ते नमो नमः पद्मलसत्करायै ।
नमो नमो दिग्वसनाय तुभ्यं चित्राम्बरायै च नमो नमस्ते ॥ ३॥

चन्द्रावतंसाय नमो नमस्ते नमोऽस्तु चन्द्राभरणाञ्चितायै ।
नमः सुवर्णाङ्कितकुण्डलाय नमोऽस्तु रत्नोज्वलकुण्डलायै ॥ ४॥

नमोऽस्तु ताराग्रहमालिकाय नमोऽस्तु हारान्वितकन्धरायै ।
सुवर्णवर्णाय नमो नमस्ते नमः सुवर्णाधिकसुन्दरायै ॥ ५॥

नमो नमस्ते त्रिपुरान्तकाय नमो नमस्ते मधुनाशनायै ।
नमो नमस्त्वन्धकसूदनाय नमो नमः कैटभसूदनायै ॥ ६॥

नमो नमो ज्ञानमयाय नित्यं नमश्चिदानन्दघनप्रदायै ।
नमो जटाजूटविराजिताय नमोऽस्तु वेणीफणिमण्डितायै ॥ ७॥

नमोऽस्तु कर्पूररसाकराय नमो लसत्कुङ्कुममण्डितायै ।
नमोऽस्तु बिल्वाम्रफलार्चिताय नमोऽस्तु कुन्दप्रसवार्चितायै ॥ ८॥

नमो जगन्मण्डलमण्डनाय नमो मणिभ्राजितमण्डनायै ।
नमोऽस्तु वेदान्तगणस्तुताय नमोऽस्तु विश्वेश्वरसंस्तुतायै ॥ ९॥

नमोऽस्तु सर्वामरपूजिताय नमोऽस्तु पद्मार्चितपादुकायै ।
नमः शिवाऽऽलिङ्गितविग्रहाय नमः शिवालिङ्गितविग्रहायै ॥ १०॥

नमो नमस्ते जनकाय नित्यं नमो नमस्ते गिरिजे जनन्यै ।
नमो नमोऽनङ्गहाराय नित्यं नमो नमोऽनङ्गविवर्धनायै ॥ ११॥

नमो नमस्तेऽस्तु विषाशनाय नमो नमस्तेस्तु सुधाशनायै ।
नमो नमस्तेऽस्तु महेश्वराय श्रीचन्दने देवि नमो नमस्ते ॥ १२॥

॥ इति शिवरहस्यान्तर्गते कुमारकृता शिवशिवास्तुतिः सम्पूर्णा ॥...